चित्रिगूडूरग्रामस्थश्रीनारसिंहसंस्कृतकलाशालायाः

प्रतिष्ठापकाध्यक्षेण

श्री॰ ति॰ गु॰ वरदाचार्येण

प्रणीतम्

# ॥ सुगुप्तिवृत्तम् ॥

**WITH A FOREWORD**

BY

*Mahāmahopādhyāya Vidyāvācaspati*

**S. KUPPUSWAMI S'ASTRI Avl.**, M.A.I.E.S., (*Retd.*)

*Retired Professor of Sanskrit and Com. Philology, Presidency College, Retired Curator, Oriental Manuscripts Library, Madras, Honorary Professor of Sanskrit, Dean of the Faculty of Oriental Studies, Annamali University, Annamalainagar.*



ग्रन्थकर्त्रा प्रकाशितम्

1937

# FOREWORD

I have much pleasure in acceding to the request of my friend, colleague and former pupil Mr. S. T. G. Varadācāri M. A., Principal, Narasimha Sanskrit College, Chittigudur, Masulipatam, that I should write a short foreword to his Sanskrit poem—सुषुप्तिवृत्तम्.

This short poem of three cantos is, as its significant title indicates, presented in the form of a *sleep-muse*. The muser, here, is the author himself, who is a sincere and sober votary of Indian culture, more especially in its Samskṛta form—of the spirit of Bhāratavarṣa, as embodied in India's cultural heritage. The first canto describes how he ponders over the contrast between India's present and India's past—the contrast between an age of ink, paper and machine and an age of warm life, reality and free manhood ; how he is greatly agitated by allowing his mind to dwell upon the social, economic and political welter in which India finds herself to-day, mainly as a result of her sons and daughters being prone to *imitate* rather than *create*—beihg carried away by the

seductive veneer of artificially engineered *uniformity* in the modern Indian world and losing sight of the fact that it is a far cry from *uniformity* to *unity* and deplorably missing the potency of the spirit of a natural, free, and organic synthesis, which forms the most precious part of ancient India's bequest to modern India; and how getting tired of this mental turmoil, he resigns himself to God and goes to sleep. In the second and third cantos, he describes his dream, in which he sees God and has the happy privilege of listening to His words of wise, inspiring and loving premonition and counsel. The poem closes with an appropriate and thrilling prayer in verses 35 to 39—Canto III.

This is a lyric which moves, with delightful effect, on the sylvan quiet, content and purity of mother India's inward life as its *motif* and culminates in *mahātmic S'anta* as its dominating Rasa. No *Sahṛdaya* is likely to miss, in this poem, the telling and preponderating suggestion of the modern type of *S'anta Rasa*, which may be called the *Mahātmic S'anta*, and with which the whole poem, and more especially the third canto, pulsates; nor could a *Sahṛdaya* resist the temptation of enjoying repeatedly the forceful references, in verses 35 to 39 of canto III, to the *Soul force* of mother-India, as

symbolised in the unsurpassably great personality of *Mahātma Gandhi*, who may be said to form a blend of the *Ālambana*, on which hangs the *Mahātmic S'ānta*, the chief Rasa of the poem and the *uddipana*, by which it is enkindled and kept up.

Mr. Varadācāri has successfully employed, in his poem, many of the good elements of Kālidāsan *Vaidarbhi*, such as an appropriate *tempo* and a happy *consonance* of sound and sense. I have read this poem three times, and portions of it, many times, with a keen enjoyment of its beauties. I am sure I am not exaggerating when I say that the style of this poetic composition exhibits a raciness, a freshness and a juicy vigour, which place this author far above the common run of the Sanskrit composers of the twentieth century.

वैदर्भीवल्लभस्येमां कालिदासस्य पद्धतिम् ।
पश्यन्तः स्वप्रवृत्तेऽस्मिन् दिष्ट्या वर्धामहे वयम् ॥

*Annamalainagar* 6-4-1937. (Sd) S. KUPPUSWAMI S'ĀSTRI.

## ॥ गुरुनमस्कारः ॥

परश्शतच्छात्रजनस्य यस्य
स्तुतौ गिरो मे प्रथमावभासः ।
गुरुस्स मेऽत्रैवमुपक्रमोक्त्या
शिवं ब्रवीतीति जितं मया हि ॥

इति
ग्रन्थकर्ता ।

॥ श्रीः ॥

# ॥ सुप्तिवृत्तम् ॥



## ॥ प्रथमः सर्गः ॥

आद्यया रामभक्तानां राजमौलेर्द्वितीयया ।
तृतीयया रमावाण्योरीश्वर्यासीह चोदितः ॥ १ ॥

विनिर्मलं लोकहितं विधातृ
वासः स्वचेतस्सदृशं वसानाम् ।
सितानुयातेन सुसंस्कृतेन
प्रहर्षयित्रीं वचसोपदेष्ट्रीम् ॥ २ ॥

महात्मनाम्नो ग्रहणे श्रुतौ च
प्रफुल्लनेत्रां विनिमीलिताक्षीम् ।
सत्सङ्गसम्मोदनिकामतृष्णां
परेङ्गितज्ञामिह तां स्मरामि ॥ ३

नमः कपटयाचित्रे धृतवामनमूर्तये ।
पुरुषोत्तमभूताय बलिदर्पविदारिणे ॥ ४ ॥

सन्त्रातुमिष्टिं पितरं स्वबाल्ये
पितुर्वचः पालयितुं प्रजाश्च ।
प्रजास्समाराधयितुं च दारान्
तत्याज यस्तं प्रणमामि भूपम् ॥ ५ ॥

क्षौणी मया ते गमिता हि दास्यं
समुज्झिता श्रीरपि सुप्रसन्ना ।
अनन्यचित्तो भवतीं भजामि
प्रसीद तस्मान्मयि देवि वाणि ॥ ६ ॥

ललितामेव वितन्वन् सृष्टिं स्रष्टारमप्यतिशयानः ।
औचित्याः मूर्तिर्मे भजनीयः कालिदासोऽत्र ॥७।

देशः प्रसिद्धो भरतस्य नाम्ना
वंशस्य कर्तुः कुरुपाण्डवानाम् ।
महात्मनो मानसवद्विशालो
भुवोऽस्ति मध्ये हृदयायमानः ॥ ८ ॥

नूनं जगन्नाथनिवासभूर्यो
विश्वम्भराया हृदयस्वरूपः ।
अङ्गेपु काये वहुपु स्थितेपु
हृद्येव जागर्ति परात्परो हि ॥ ९ ॥

युगे युगे सम्भवतां क्षयस्य
दुष्टात्मनां व्याजवशेन विष्णुः ।
दशापि वारानवतीर्य यत्र
स्वपक्षपातं विशदीचकार ॥ १० ॥

लोकस्य तापप्रशमाय तापं
विष्णोश्शिवस्यापि च धर्मपत्न्यौ ।
यत्रापतुः सेतुहिमालयौ तौ
यस्यावधिर्दक्षिण उत्तरश्च ॥ ११ ॥

यस्याभ्रचुम्बीनि न शक्नुवन्ति
शृङ्गाणि मर्त्याः सशरीरमाप्तुम् ।
हिमालयो रक्षति वत्स एषः
यमुत्तरस्यां दिशि दुर्जनेभ्यः ॥ १२ ॥

यस्यात्मजाताः परिणीय सिन्धूः
तज्जानिरित्याप्तयशास्समुद्रः ।
रक्षां विधत्ते न तथाऽन्यदिक्षु
पुत्राद्धि जामातुरियान्विशेषः ॥ १३ ॥

दैवात्तु वायव्यदिशि प्रपन्नः
उच्चैश्शिरा नीचनगाश्रयं यः ।
मुहुर्मुहुर्मर्मणि भिद्यतेऽन्यैः
अपथ्यसेवीव वली रुजाभिः ॥ १४ ॥

यो जन्मनात्मानममंस्त पूतं
तपस्यया पूततरं च गौर्याः ।
हिमालयस्स्थावररूपतोऽपि
सर्वोन्नतत्वं वितनोति यस्य ॥ १५ ॥

विधाय तन्वामिव रक्तनाडीः
पुष्टिप्रदा यत्र नदीर्विधाता ।
स्वविस्मृतिं वारयितुं क्वचित्तु
वृष्ट्यम्बुनिम्नत्वमपि व्यधत्त ॥ १६ ॥

क्वचिद्धिमांशुः क्वचिदग्निरश्मिः
क्वचित्समांशुः सविता प्रसूय ।
यत्राखिलस्थावरजङ्गमानि
सङ्क्षेपमादर्शयते धरण्याः ॥ १७ ॥

यो नूनमूधो भवति क्षितेर्गोः
रत्नौषधिक्षीरनिधानभूतम् ।
वत्सो हिमाद्रिः कथमन्यथा तु
तत्रैव नित्यं कृतसन्निधानः ॥ १८

यत्रापगाभिः प्रविदार्य मध्यं
भुवोऽपहृत्य प्रणिधाय तोये ।
समर्पितैः सिन्धुपतेः कियद्भिः
रत्नैस्स रत्नाकरसंज्ञकोऽभूत् ॥ १९ ॥

सम्प्रेष्य वह्नेर्मुखतो हविर्यो
मेघैस्ततः प्रापितवृष्टिसम्पत् ।
लोकान्तरेणापि समं प्रपेदे
चिराय योगं किमुतान्यदेशैः ॥ २० ॥

सितासितश्यावसुवर्णवर्णैः
बिभर्ति कान्ति निचितो मनुष्यैः ।
यः कैरवेन्दीवरहल्लकाद्यैः
मनोऽभिरामस्य महाह्रदस्य ॥ २१

अनादिभूताः श्रुतयश्च यत्र
कल्पेषु दृष्टा ऋषिभिर्महद्भिः ।
शास्त्राणि चापि प्रथितानि सन्ति
त्रिवर्गमोक्षौपयिकानि विज्ञैः ॥ २२ ॥

श्रुत्युक्तधर्माचरणाज्जनानां
यः कर्मभूमिः प्रथितः पृथिव्याम् ।
श्रुत्युत्तमाङ्गप्रतिपादिता धीः
यं ज्ञानभूमिं च ततान पूर्वम् ॥ २३ ॥

उच्चावचैरास्तिकनास्तिकाद्यैः
मतैश्च भाषाव्यवहारभेदैः ।
विचक्षणा विश्वविधातृसृष्टं
यं विश्वविद्यालयमामनन्ति ॥ २४ ॥

स्वधर्मनिष्ठो महितो द्विजादिः
ज्ञानप्रदा निर्जरभारती च ।
आर्षे मतं प्रापकमात्मयोनेः
यस्य प्रतिष्ठामतुलां चकार ॥ २५ ॥

अयं स देशः स्पृहणीयसम्पत्
अन्यादृशीमद्य बिभर्ति रीतिम् ।
भूकम्पतो नष्टपुराणभूतिः
प्रक्रान्तनिर्माण इव प्रदेशः ॥ २६ ॥

विप्रस्य सम्पादयिता द्विजत्वं
संसाधकस्तस्य च भाविभूतेः ।
यस्सर्वसंस्कारमहत्तमोऽभूत्
स यज्ञसूत्रैकफलो महोऽस्ति ॥ २७ ॥

भिक्षामटन् वीतसुखो गुरोर्यः
शुश्रूषयाऽभूत्समुपात्तविद्यः ।
स भोगतृष्णश्च महाभिमानी
क्रीणाति विद्यां गुरुतो धनेन ॥ २८ ॥

वेदांस्तदङ्गानि च यानि सर्वो
द्विजन्मसु ज्ञानकृते पपाठ ।
एकस्सहस्रेषु न तान्यधीते
विद्यास्वहो वित्तकरीषु रक्तः ॥ २९

यो ब्रह्मचर्यव्रतपूरणादिः
धर्मप्रजोत्पत्तिपरावधिश्च ।
सर्वोपकारार्थमनुप्रविष्टः
निजोपभोगाय स आश्रमोऽस्ति ॥ ३० ॥

निर्विश्य भोगाननुभूय दुःखं
प्रसूतिमुत्पाद्य गृही च यत्र ।
पत्नीद्वितीयो वनमाविवेश
शान्तं प्रशान्त्यै प्रविलुप्त एषः ॥ ३१ ॥

समीक्ष्य संसारमसारमस्मात्
विरज्य संन्यस्तसमस्तसङ्गः ।
यमास्थितो द्वन्द्वचयं व्यतीत्य
ब्रह्माश्रितोऽभूद्विरलोऽस्ति तुर्यः ॥ ३२ ॥

नित्याग्निहोत्रा नियतेन्द्रियाश्च
तपोधनाश्च श्रुतपारगाश्च ।
शरीरधृत्यै भृतिमीप्सवश्च
शिष्योपदेशव्यसनाभिभूताः ॥ ३३ ॥

श्वःश्रेयसायेह परत्र चापि
खेदं भजन्तस्सततं जनानाम् ।
वाक्यात्परेणाचरणेन युक्ताः
पुराप्रजा जानपदाप्रजाताः ॥ ३४ ॥

न ब्रह्मनिष्ठा न जितात्मता वा
न यागकर्मापि न वेदपाठः ।
नाप्यग्निकार्यं न विधिश्च सान्ध्यो
विप्रस्य शिष्टं बत यज्ञसूत्रम् ॥ ३५ ॥

पित्रे च सत्याय विपर्ययाय
हिंसाविधेः स्वं सकलं विहाय ।
रामादिभिः पूततमे तु वर्णे
जाता जहत्यन्त्यकृते व्रताधान् ॥ ३६ ॥

त्राणाय शस्त्रं न तु पीडनाय
हिंस्रान्विनेतुं मृगया मुदे न ।
दानार्थमर्थो न तु भोगहेतोः
भोगाश्च धीरन्वयुजे न भुक्त्यै ॥ ३७ ॥

दण्डो न कोपादनुकम्पया तु
नृपः प्रजाभ्यो न तु तास्तदर्थम् ।
इत्थं स्थिते पूर्वमहीशवृत्ते
विपर्ययस्तस्य तु दृश्यतेऽद्य ॥ ३८ ॥

दोहोऽस्ति यत्कामदुहो धरित्र्याः
शरीरिपोपान् स्थितिकारणं च ।
विष्णुत्वमापादयितृ स्वकर्तुः
जहौ धनार्थी कृषिकर्म वैश्यः ॥ ३९ ॥

अभ्यर्च्यतेऽग्निः प्रजया समं यान्
द्रव्यं फलं चाध्वरकर्मणो ये ।
विड्भिः पशूनां परिपालनं स्वं
लोकस्य भूयोऽपकृतं विहाय ॥ ४० ॥

काचित्कवस्तुन्यपि दुर्लभत्वं
अपास्य सुप्रापमिदं विधातुम् ।
यल्लोकहेतोर्विहितं विशां प्राक्
स्वार्थाय तत्कर्म चरन्ति तेऽद्य ॥ ४१

दिवानिशं पापमिव प्रवृद्धं
दातृग्रहीत्रोरवसादनं च ।
अन्ते समूलं स्वयमेव नश्यन्
विशां कुसीदं प्रथमाऽस्ति वृत्तिः ॥ ४२ ॥

मुखादिपूज्यावयवेषु सत्सु
यः पूज्यते च ध्रियते च मूर्ध्नि ।
बिभर्ति तन्वा अतनुं धुरं यो
नीचैः स्थितो मूलमिवालयस्य ॥ ४३ ॥

देही च यस्मादसतोऽस्ति पङ्गुः
योऽधःस्थितावप्यथवा ततोऽप्यः ।
तस्मात्पदः प्राप्य जनिं विधातुः
तुर्याः कथं स्युः प्रथमेभ्य ऊनाः ॥ ४४ ॥

राजा यया रञ्जयते प्रजाः स्वाः
प्रसूश्च संवर्धयते प्रसूतिम् ।
भक्तश्च सन्तर्पयते स्वदैवं
तया स्ववृत्त्यापि समर्चितास्ते ॥ ४५ ॥

तथापि मोहान्निजमूल्यमूढाः
स्वमन्दभाग्यं परकीयदौष्ट्यम् ।
विगर्हमाणा जहति स्ववृत्तिं
समाश्रयन्ते परकीयधर्मम् ॥ ४६ ॥

सेवा शुना चेत्क्रियते श्ववृत्तिः
विज्ञैः कृता चेन्महिता भवेत्सा ।
पूतं वसिष्ठस्य परिग्रहेण
पूत्यस्ति चाज्ञस्य पुरोहितत्वम् ॥ ४७ ॥

स्वधर्मचर्याच्युतिमेवमेत्य
धनार्थिनः स्वार्थपराश्च सर्वे ।
युद्ध्वा मिथः श्वान इवामिषाय
नीताः परैस्ते स्ववशं सृगालैः ॥ ४८ ॥

तदस्य दिष्टं विषयस्य दास्यं
आसीच्चिरेण क्रमशः परेषाम् ।
क्षीणे पटुत्वे जराया हि देहं
वश्यत्वमायाति रुजाक्रिमीणाम् ॥ ४९ ॥

सुधारसस्यन्दिभिराप्तवाक्यैः
आगामिभाग्योदयसूचकैश्च ।
अनिष्टकामानुपसान्त्वयन्ति
यथात्मजातान पितरो नृपा नः ॥ ५० ॥

वित्तादिभिस्तोषितविज्ञशूराः
स्वार्थाविरुद्धं वहुधोपकृत्य ।
भूपाः प्रजाः स्वा अनुरञ्जयन्ति
प्रजानुरागाद्धि नृपस्य भूतिः ॥ ५१ ॥

नृपा यदात्मस्थिरताविलोपि
प्रजासु जिघ्रन्त्यविभेदवत्त्वम् ।
वैमत्यबीजानि वपन्ति तत्र
भेदो हि नीतिर्विजये वहूनाम् ॥ ५२ ॥

मधुस्रवद्भिर्वचनैरहार्यान्
कृतोपकारैरवशीकृतांश्च ।
निर्भीकमावेदयतः स्वबुद्धिं
निजद्विपस्ते खलु दण्डयन्ति ॥ ५३ ॥

दास्यं विधित्सुस्सुचिरं विधिर्नो
नूनं परेभ्योऽदित यन्त्रशक्तिम् ।
यद्दुर्वरायां बहवोऽत्र जाता
द्विरह्नि भुक्तं गणयन्ति भोगम् ॥ ५४ ॥

जलाय मेघं दहनाय वह्निं
अन्नाय गाश्च स्रुतये च सूर्यम् ।
ययाचिरे ये किल मानवास्ते
सिद्धेप्सिताः कामदुघान् स्वयन्त्रान् ॥ ५५ ॥

स्थले जले व्योम्नि समं चरन्तः
त्रैविक्रमं प्रक्रममाप्नुवन्ति ।
दूरस्थितस्य श्रुतिदर्शनाभ्यां
योगं विना योगिन एव सन्ति ॥ ५६ ॥

देशस्य कालस्य च विप्रकर्षं
व्यतीत्य जित्वाखिलदुर्बलांश्च ।
विच्छिद्य तद्वृत्तिचयं च तांश्च
वितन्वते स्वोदरपूरणं ते ॥ ५७ ॥

यन्त्रं सहस्रैस्सुचिरं विधेयां
क्षणे क्रियामेककमेव कुर्वत् ।
तज्जीविकाच्छेदमहाघदुष्टं
स्वस्वामिनेऽर्थं बहुलं प्रदत्ते ॥ ५८ ॥

गृहाद्विनिष्क्रम्य निजात्स्ववृत्तीः
ग्रामेषु ये प्रागवलम्ब्य तस्थुः ।
निर्जित्य तानद्य तु तेषु मुख्यान्
बन्दीकरोति स्वगृहेषु यन्त्रम् ॥ ५९ ॥

स्ववृत्तिविच्छेदवशात् क्षुधार्तैः
कैश्चिज्जनैः कैरपि निर्गतैश्च ।
ग्रामोऽद्य यक्ष्मादतिकार्श्यमाप्तैः
अङ्गैर्गतौजोभिरिवास्ति मर्त्यः ॥ ६० ॥

पुष्टश्च तुष्टोऽपि निर्वृतश्च
शान्तश्च यो वेश्म बभूव तत्र ।
क्षुत्क्षोभनैराश्यविषादभावाः
ग्रामेऽवकाशं पृथुलं लभन्ते ॥ ६१ ॥

अस्याः प्रतीकारविधौ विपत्तेः

देशस्य दैव्या न नरस्य शक्तिः ।

विपाद्मल्पेतरमाप्त एवं

अगां कदाचिन्महदाकुलत्वम् ॥ ६२ ॥

शोकेन चान्तस्तमसा बहिश्च

नैशेन लुप्ताखिलशेमुषीकः ।

मत्वा परज्योतिष एव रक्षां

जगाम निद्रां परतोऽर्धरात्रात् ॥ ६३ ॥

इति श्रीवरदाचार्यकृतौ सुपुप्तिवृत्ते भारतदेशवर्णनं नाम

॥ प्रथमस्सर्गः ॥

# ॥ द्वितीयः सर्गः ॥



अथ क्षपायाश्चरमे विभागे
संस्कारदार्ढ्येन हृदोऽन्यथा वा ।
त्राणाय यद्याचितमात्मनासीत्
दूरान्मया ज्योतिरदर्शि तादृक् ॥ १ ॥

जगत्स्वभासा विमलेन लिप्त्वा
शोभामपूर्वामुदपीपदद्यत् ।
अपूर्ववर्णेन पुराणचित्रं
नवत्वमापादयितेव शिल्पी ॥ २ ॥

यत्सूर्यभासां प्रविभास्वरत्वं
इन्दुद्युतीनामपि शीतलत्वम् ।
बिभ्रत्तमोहन्तृ सुधाभिवर्षि
यथा गभीरं रसवच्च काव्यम् ॥ ३ ॥

अनेन चन्द्रार्कमरीचिमत्ता
सुखानुमेयापि बभूव यस्य ।
यत्कैरवाम्भोरुहसञ्चयोऽभूत्
पार्श्वह्रदस्थो युगपत्प्रफुल्लः ॥ ४ ॥

क्रमादिदं ब्रह्मण एव तेजो
न भौतिकं चेति विनिश्चितं यत् ।
हृत्पुण्डरीकस्य ममापि यस्मात्
अभूतपूर्वं विदधे विकासम् ॥ ५ ॥

स्वदेशरक्षां प्रति याचितं यत्
एतत्परं ज्योतिरिति प्रतीतः ।
मुदा विवृद्धो विनयाद्विनम्रो
मुहुस्तदानीं क्रमशोऽहमासम् ॥ ६ ॥

तत्रैव चेतो नयने च बद्ध्वा
निवृत्तशेषेन्द्रियवृत्तिरेव ।
कृताञ्जलिर्योगिभिरप्यगम्यं
तत्सन्निधिं प्राप्तमहं प्रवृत्तः ॥ ७ ॥

आसीद्यतेदं हि मया पदार्थः
आरोहयुक्तः परिणाहवांश्च ।
ततः कराद्यावयवैश्शरीरी
क्रमाद्विबुद्धं पुरुषोत्तमश्च ॥ ८ ॥

मनोरथस्यापि न गोचरो यः
कथं स सिद्ध्येत्स्वमुखोऽवलोकः ।
इत्यात्मभाग्ये क्षणमप्रतीतो
वीतप्रमोदो वितथत्वबुद्ध्या ॥ ९ ॥

स्वप्नः किमेषोऽस्ति किमिन्द्रजालो
माया भवेद्वा मतिविभ्रमो वा ।
विकल्प्य चैवं परमार्थमाप्तः
कृपाप्रकर्षात्परमस्य पुंसः ॥ १० ॥

यथा प्रनष्टं प्रतिपद्य राज्यं
राजा प्रमोदेन विलुप्तसंज्ञः ।
मोहाद्विनष्टस्य चिदात्मकस्य
लाभात्प्रहृष्टोऽपरमोहमापम् ॥ ११ ॥

स्वस्थस्तमानन्दमयं निपीय
पिपासिताभ्यामिव लोचनाभ्याम् ।
रसातिरेकादभवं प्रमत्तो
मधाविवालिर्मधुना नवेन ॥ १२ ॥

संज्ञां प्रपन्नो दयया दयालोः
जगत्पतेर्दण्डवदानतस्सन् ।
तत्पादपङ्केरुहलग्नचेताः
अयासिषं मोहवशं पुनश्च ॥ १३ ॥

उत्तिष्ठ वत्सेति निशम्य वाक्यं
गम्भीरमभ्रस्तनितं यथाऽहम् ।
उत्थाय तेनाभिहितो विधात्रा
वत्स प्रसन्नोऽस्मि विभुस्तवेति ॥ १४ ॥

सुधामयं तद्वचनं निशम्य
मुक्तोऽहमस्मीति परं प्रहृष्य ।
सर्वेश्वरस्य स्तुतिकैतवान्मद्-
आनन्दमुद्रातुमहं प्रवृत्तः ॥ १५ ॥

न भाति भानुर्न च वाति वायुः
नाप्येति दाहं दहनो न जन्तुः ।
प्रजायतेऽलं चलितुं तृणं नो
विना तवाज्ञां परमेश्वरस्य ॥ १६ ॥

चारास्तवास्मच्चरितावगत्यै
भूतानि पञ्चेति मृषोद्यमेतत् ।
नह्यस्ति तस्य प्रणिधेरपेक्षा
यस्तत्प्रवृत्तिं प्रतिपत्तुमीष्टे ॥ १७ ॥

आन्ध्येन नेत्रस्य यथा धनस्य
नैस्स्व्येन भासश्च तमोभरेण ।
बुभुत्सवोऽसन्निधिना तथा ते
महोपकारं बत वञ्चिताः स्मः ॥ १८ ॥

फलानुमेयं सदपि प्रतीमो
दुर्बोधमेवेति महीशकर्म ।
वेद्यं न विश्वेश फलं यदीयं
कीदृक्तवारम्भ इति स्तुवीमः ॥ १९ ॥

कुर्वाणमेकं सरसं च काव्यं
स्रष्टारमाहुर्विबुधाः कवीन्द्रम् ।
अनन्तरूपं च विचित्रमेतत्
जगत्सृजन्तं क इतीड्महे त्वाम् ॥ २० ॥

वाचोऽप्यतीतो मनसोऽप्यगम्यः
पदे परस्मिन्विहितस्थितिस्त्वम् ।
अनन्यचित्तस्य बुधस्य वाचि
चित्ते च जागर्षि तदाश्रवस्सन् ॥ २१ ॥

जगद्विभासी सततं स भास्वान्
शेषोऽनिशं भूवहनैकदीक्षः ।
स्वं कर्मदाक्ष्यं स्वमिवाप्नुतस्त्वत्
सर्गस्थितिप्रत्यवहारहेतोः ॥ २२ ॥

स्वचित्तवृत्तीरनुरुध्य मूढाः
तत्तत्स्वरूपं तव कल्पयन्ति ।
प्राज्ञास्तु चिन्तामणिवद्भवन्तं
विदन्ति विश्वाधिप विश्वरूपम् ॥ २३ ॥

शरीरहेतुर्जननी पिता च
गोप्ता नृपश्चात्महितो गुरुश्च ।
उदीरिता देहभृतां महाप्ताः
तत्सन्निपातः क इवासि न त्वम् ॥ २४ ॥

सदा तवाज्ञावशवर्तिनं यत्
तनोषि ते तुल्यमिदं हि युक्तम् ।
पापेऽपि सा वृत्तिरुपाश्रितेति
वृत्तिस्तु विस्माययते तवैषा ॥ २५ ॥

कदध्वगस्सन्ननुकम्पनीयः
तवाभिनन्द्यश्च गतस्तु मार्गम् ।
यथात्मजन्मा जनकस्य रुग्णो
जातः पुनर्मृत्युमुखान्निवृत्त्य ॥ २६ ॥

आजन्मनश्श्रान्तमनन्यनिघ्नोऽ-
प्यवैति मर्त्यो न तवोपकारम् ।
त्वां च स्वमूलं गमयत्यभावं
निवर्तसे नोपकृतेस्तथापि ॥ २७ ॥

सर्गं चिकीर्षुश्च नवं मनोज्ञं
त्वं जीर्णलोकप्रलयं विधत्से ।
निर्मातुकामो हि नवीनसौधं
निपातयत्येव पुराणगेहम् ॥ २८ ॥

त्वं लोककल्याणमपेक्षमाणः
कदापि भव्यं क्षपयन्निवासि ।
विधित्सया किं सलिलाशयस्य
न खन्यते भूः कलमप्ररोहा ॥ २९ ॥

दुष्टात्मनो दौष्ट्यमपास्य भद्रं
विधित्सुरुत्पादयसेऽस्य दुःखम् ।
रुग्णस्य जन्तोः कुशलं चिकीर्षुः
वैद्यस्तदङ्गानि निकृन्ततीह ॥ ३० ॥

कदाचिदार्तिं परिकल्प्य साधोः
परीक्षसे त्वं तमिति ब्रुवन्ति ।
सर्वज्ञताभङ्गभिया वयं ते
लोकोपदेशार्थमिदं वदामः ॥ ३१ ॥

आत्मानमात्मास्थितमप्यविद्या-
च्छन्ना वयं त्वां न हि बोद्धुमीशाः ।
न जातु गृह्णाति विलुप्तदृष्टिः
निधिं पुरस्ताद्विनिवेशितं हि ॥ ३२ ॥

ईक्षामहे त्वां सदयो यदि त्वं
नेक्षामहे त्वां विदयो यदि त्वम् ।
दोषस्य नो मूलमिमं स्वकीयं
सम्भाव्य तं प्राक् परिवर्जय त्वम् ॥ ३३ ॥

दयां तवोपेत्य न जन्म जन्मी
प्राप्नोति भूयो यदि सत्यमेतत् ।
किमर्थमद्यापि वयं निमग्नाः
संसारकीलालनिधौ दयाब्धे ॥ ३४ ॥

को हेतुरत्रेति विचिन्त्यमाने
न पारतन्त्र्यं घटते त्वयीशे ।
न निर्दयत्वं क्षममत्र वक्तुं
दयामये गोप्तरि दीनबन्धौ ॥ ३५ ॥

सर्वस्य मुक्त्या सह मेऽपि मुक्तिः
सृष्ट्यादिकात्कर्मण इत्युदीक्ष्य ।
स्वीयाधिकाराच्च्युतिमीहमानो
जगद्धितं नूनमुपेक्षसे त्वम् ॥ ३६ ॥

एकान्तयोगेन समं त्वया नो
भवत्यवज्ञात्र वयं न निन्द्याः ।
प्रिया गताऽङ्कं सततं प्रियस्य
प्रकल्पते नैव हि तस्य रुच्यै ॥ ३७ ॥

प्रीतिः प्रजायां जनकस्य याऽस्ति
न सा प्रसूतेः पितरीह लोके ।
नैसर्गिकं धर्ममिमं चरन्तो
वयं विधातस्त्वयि नाधिदोषाः ॥ ३८ ॥

प्रीणातु दोषैस्सहिताऽपि मेऽसौ
भक्तस्य भक्तप्रिय सन्नुतिस्त्वाम् ।
अवन्ति तातं शिशुजल्पितानि
परं वचोभ्यः सुकवेर्हि लोके ॥ ३९ ॥

इति श्रीवरदाचार्यकृतौ सुषुप्तिवृत्ते परञ्ज्योतिर्दर्शनं नाम
॥ द्वितीयस्सर्गः ॥

# ॥ तृतीयः सर्गः ॥



श्रुत्वा दयालुः सदयं ममोक्तीः
प्रफुल्लनेत्रो विकसत्कपोलः ।
शुचिस्मितावर्धितदन्तकान्तिः
उवाच वाचं मधुरस्वरेण ॥ १ ॥

स्वदेशदास्यं प्रविचिन्त्य खिन्नो
मामेव गच्छन् शरणं हृदि त्वम् ।
साक्षात्कृतिं वत्स मम प्रपन्नः
आवर्जनीयस्य मदेकचित्तैः ॥ २ ॥

मद्दर्शने दर्शितभक्तिचेष्टः
त्वत्पारवश्यं जनयन् शिलासु ।
कृतोपकारोऽसि सचेतनानां
बुधो यथा बोधविधौ प्रवृत्तः ॥ ३ ॥

प्रसन्नमेवं तव मत्परोक्तिः
प्रीतं च मां प्रीततरं चकार ।
हृत्कायवाचाबहुपाशरज्ज्वा
भक्त्या निबद्धस्तव वश्य एव ॥ ४ ॥

धन्योऽसि यस्मान्निजदेशदुःखैः
दुःखं महद्भिर्महदागतस्त्वम् ।
न यान्ति सत्त्वं परकीयभावैः
अभावितान्तःकरणा न मां च ॥ ५ ॥

उत्पत्तिबाल्ये युवताजरान्ताः
अशेषसृष्टेरपि या अवस्थाः ।
काले भवन्त्यो न बुधैर्विशोच्याः
नोपेक्षणीया विपरीतभूताः ॥ ६ ॥

ससङ्ग्रहं मद्वदतो निबोध
देशस्य ते दुस्स्थितिकारणानि ।
तेषां प्रतीकारविधामपि त्वं
मत्तः परो नास्ति तवोपदेष्टा ॥ ७ ॥

अनादरं द्वेषमपि स्वकीये
प्राप्याखिले वस्तुनि वीतबुद्धिः ।
परस्य सम्बन्धिनि बद्धरागो
नीचैःस्थितावत्र जनोऽस्ति मूलम् ॥ ८ ॥

शब्दप्रमाणं च तथापवर्गः
परप्रताराय खलस्य सृष्टिः ।
इत्यन्यमात्मानमपि प्रतार्य
नीचैःस्थितावत्र जनोऽस्ति मूलम् ॥ ९ ॥

प्रत्यक्षमानं च तथानुमानं
प्रमाणयन् कुत्सिततर्कधीरः ।
कामार्थयोरेव निबद्धदृष्टिः
नीचैःस्थितावत्र जनोऽस्ति मूलम् ॥ १० ॥

मदात्मजातेषु जनेषु कांश्चिन्
उपेक्ष्य शक्तावपि दुःस्थितान्यः ।
दयाविहीनो निजकर्मभोजी
नीचैःस्थितावत्र जनोऽस्ति मूलम् ॥ ११

आत्मोन्नतीचस्थितिरात्मनैव
परो भवत्यत्र निमित्तमात्रम् ।
पयस्समाक्रामति निम्नदेशम्
तमुन्नमन्तं विजहाति सद्यः ॥ १२ ॥

गुणक्रियाभेदवशात्पुरेदं
सृष्टं मया वर्णचतुष्कमासीत् ।
उद्घोषितं यद्यपि युद्धभूमौ
मया वतेदं न जनाः स्मरन्ति ॥ १३ ॥

न लोकयात्रौपयिकक्रियासु
न्यूनाधिकत्वं प्रविचिन्तनीयम् ।
स्वीयेऽतिसम्पर्कवशादवज्ञा
प्रीत्यै परत्राधिकता न तत्र ॥ १४ ॥

पुराकृतेनैव भजन्ति लोके
जायाः स्वकीया मनुजाः क्रियाश्च ।
स्वीयासु तुष्टा वशिनो भवन्ति
वामा भवेयुः विटशब्दभाजः ॥ १५ ॥

वर्णा भजन्तो विहितक्रियाः स्वाः
नन्दन्ति भर्तार इवात्मपत्नीः ।
सीदन्ति रक्तास्तु परक्रियासु
नरा इवान्यप्रमदासु नूनम् ॥ १६ ॥

क्रिया न कर्तुं विहितापि शक्या
नरेण सम्यक्कथमन्यदीया ।
एकां जहत्त्यक्ष्यति नापरां न
फलं क्रिया स्वा स्थिरता च भग्ना ॥ १७ ॥

अनन्यगामित्वमुपेयिवद्भिः
क्रियाः प्रसीदन्ति निषेव्यमाणाः ।
प्रसूय चाभीप्सितमर्थजातं
प्रसादयन्ति स्वपरिग्रहीतॄन् ॥ १८ ॥

पितुर्गुणाः रूपगुणाः क्रियासु
नैपुण्यमप्यात्मजमाप्नुवन्ति ।
पितुः क्रियां ऋद्धिमिवाभुवीत
विरुद्धवृत्तिर्भवितैव मूर्खः ॥ १९ ॥

कुलक्रमोपस्थितयः क्रियाश्च
जनश्च हृष्यन्ति मिथोऽनुरक्ताः ।
प्रजाः प्रजानामपि रक्षितेव
सङ्गोऽनुरागाय हि सानुबन्धः ॥ २० ।

शरीरबुद्ध्यात्मसु मानवस्य
यथोत्तरं भद्रकरी हि वृद्धिः ।
एकान्तपोषेण तु पूर्वपूर्वं
विनाशमुत्पादयतेऽस्य नूनम् ॥ २१ ॥

विहाय बुद्ध्यादिकमात्मदेहं
संवर्धयन्नस्ति पशोरभिन्नः ।
उपेक्षितात्मा गमयंस्तु बुद्धिं
पुष्टिं परां राक्षस एव जातः ॥ २२ ॥

शरीरबुद्धी स्ववशे निधाय
पुष्णाति यः स्वात्मगुणान्महात्मा ।
भवाब्धिमुत्तीर्य स एककोऽपि
जगन्ति संरक्षति राक्षसेभ्यः ॥ २३ ॥

कालेऽद्य बुद्धेर्विभवेन दृप्ताः
जानन्ति न स्वं न परात्परं माम् ।
सृष्टिर्विधातुर्विदिता जिता चे-
त्यामोदमुन्मादमपि प्रयान्ति ॥ २४ ॥

तेषां किलाजायत तीक्ष्णबुद्धौ
यन्त्रं यदूनां मुसलं पुरेव ।
येन प्रशान्ते सुखिते च लोके
क्षोभं च दुःखं जनयन्ति तेऽद्य ॥ २५ ॥

अनेन विज्ञेयमहाप्रभावं
यन्त्रं स्ववीर्याहृतमन्त्रकीर्ति ।
प्रकल्पितं सन् करणं नरेण
तनोति यत्तं करणं स्वकीयम् ॥ २६ ॥

न केवलं पौष्टिकमेव यन्त्रं
अस्त्यप्यलं मन्त्र इवाभिचारे ।
साक्षात्कृतं यत्तु महासमीके
वृत्तेऽपि भीतिं जनयत्यमेयाम् ॥ २७ ॥

तस्मान्महीशास्तदुपासतेऽद्य
मन्त्रं यथा प्राञ्जलयस्समौनाः ।
आदावुपैतुं स्वयमेव ऋद्धिं
तद्धारिणो मारयितुं ततोऽन्यान् ॥ २८ ॥

ध्रुवं ध्रुवं युद्धमपूर्वमेष्यन्
कुर्यात्क्षयं नातिचिरेण लोके ।
यत्राश्रयस्य प्रलयेन नूनं
यन्त्रं प्रशान्तं हुतभुग्यथा स्यात् ॥ २९ ॥

तज्जागृतोत्तिष्ठत मोहसुप्तेः
मा भूत लोभाख्यपिशाचवश्याः ।
आत्मानमात्मस्थमवेत शश्वत्
पुष्णीत बुद्धिं च जगच्छिवाय ॥ ३० ॥

तत्सर्वथैवं परिहार्यतैव
यन्त्रस्य सिध्येदिति नावबोध्यम् ।
आदेशभावं प्रविहाय कर्तुः
यदागमस्तन्न तदास्ति दुष्टम् ॥ ३१ ॥

समुद्ररुद्धाम्बु विमोच्य वर्षन्
बहुत्र जीमूत इवास्तु यन्त्रम् ।
बहूपभोग्यं परिमुच्य लुब्धे
रुणद्धि यत्तन्मम सम्मतं न ॥ ३२ ॥

इत्थं वदन्तं जगतां पतिं तं
कोलाहलः कोऽपि कलश्चकर्ष ।
एकां प्रियां दक्षिणमालपन्तं
दूतिर्यथाकालमिवान्यदीया ॥ ३३ ॥

दूरस्थमुद्धः निकटं व्रजन्तं
शुश्राव यं फुल्लमुखाब्ज एषः ।
मच्छ्रेयसश्रान्तमनन्तसूक्तेः
दिदेश योऽभूत्स जनस्य गीतिः ॥ ३४ ॥

जय जय दुष्टनिबर्हण
जय जय शिष्टजनावन
जय जय दृप्तविमर्दन
जय जय पातितपालन ॥ ३५ ॥

जय जय भारतमण्डल
जय जय भूतमहोदय ।
जय जय भङ्गुरदुःस्थित
जय जय सुस्थिरभाविक ॥ ३६ ॥

हन्तर्यहिंसां विषमे च सत्यं
जये च नम्रत्वमुपाददानम् ।
दोषं द्विषन्तं न तु दोषवन्तं
मृष्यन्तमात्मन्यपभाषमाणम् ॥ ३७ ॥

स्वं शोषयन्तं परपोषणाय
स्वतोऽल्पवस्त्रं परवस्त्रवृद्ध्यै ।
पत्नीद्वितीयं स्वजितात्मतायै
परत्र दोषे कथितात्मदोषम् ॥ ३८ ॥

स्वयं तरन्तं परतारणाय
पुनानमात्मानमथान्यशुद्ध्यै ।
जगत्प्रदीपं यशसा सुगन्धि
भद्राय नः पातु स देवदेवः ॥ ३९ ॥

इत्यैककण्ठ्येन विमुक्तकण्ठं
उद्गीयमाना सुजनेन गीतिः ।
ईशस्य तत्रानुमतिं विवक्षोः
प्रतिश्रुताभून्मुखकन्दरायाः ॥ ४० ॥

आवृत्तिभाजा नितरां हृतस्सन्
गीतेन तेनैव निमीलिताक्षः ।
समाधिनिष्ठः परमात्मदर्शी
योगीव योगीश्वर एव आसीत् ॥ ४१ ॥

दृष्ट्वाऽहं महदिदमद्भुतं विसंज्ञः
सम्बोधात्परिचितकण्ठनिस्वनेन ।
तेनैवाखिलजनिहेतुना प्रबुद्धः
तद्वृत्तं त्ववगतवान् सुषुप्तिवृत्तम् ॥ ४२ ॥

न ददृशे स मया पुरुषोत्तमः
श्रुतिपथं न ययौ मम तस्य वाक् ।
तदभवच्छ्रुतमेव तु गीतकं
बहिरगामथ गातृदिदृक्षया ॥ ४३ ॥

गच्छत्यस्तं शशिनि विपदीवैकतो जन्मभूमेः
उद्यन्मूर्तौ विलसति रवौ श्रेयसीवान्यतोऽस्याः ।
मन्दं वाते चलति सुरभौ दाक्षिणे मित्रवच्च
प्रीत्या सिक्ता नगरतरुणैर्भूपिते राजमार्गे ॥ ४४ ॥

शुभ्रज्योत्स्नाधवलवसनाच्छादिताङ्गान्प्रबुद्धान्
शूरान्दान्तान्भगवति गुरुष्वात्मदेशे च रक्तान् ।
भूमेरस्यास्सुचरितफलानीव वीक्ष्याहमासं
मन्दोत्कण्ठः परमपुरुषे गायतः पौरमुख्यान् ॥ ४५ ॥

देव्या ललितया वाचा ययात्राऽहं प्रवर्तितः ।
तस्याश्च धीमतां तुष्ट्या कृतेः स्यात्कृतिता च मे ॥४६॥

इत्यनन्यहृदयेन सेवया
तोषिता विबुधभारती ददौ ।
यं वरं हि वरदाय सत्कृतिं
तत्सुषुप्तिचरितं समापितम् ॥ ४७ ॥

इति श्रीवरदाचार्यकृतौ सुषुप्तिवृत्ते पुरुषोत्तमसन्देशो नाम

॥ तृतीयस्सर्गः ॥

---

## ERRATUM.

| Page | Line | For | Read |
|---|---|---|---|
| १६ | ११ | जराया | जरया |
| २२ | ५ | विमलेन लिप्ता | ऽमलया विलिप्य |

Vavilla Press, Madras.